विषय - दर्शन

- 29.2 × 11 × 0.2 c.m.

पेज - 5

पश्चकदाचित्सतादात्म्यारोपं प्रति सदद्य

... ... ... ...

अलीकानिष्ठ सतादात्म्यरूपेणापरित नामसंख्या

ध्यवहतिचेन

---

(2) कुवलयानंदटीका

लेखक श्री मार्द्रमचांद्रभट्ट

पेज = 12

= 34 × 13 × ·2 c.m.

विषयामितरानंगत्वं चविताप्रतंतदुक्त स्त्यादि

... ... ... ...

श्री मार्द्रमच्चांद्रभट्टात्मजवैद्यनाथकृता कुवल-

-यानंद व्याख्यालंकारचांद्रिका समाप्ता



NO-3

न च कदाचित्सत्तादात्म्यारोपं प्रति तद्ध्वंसत्वज्ञानस्य कारणत्वेनाली
कस्य सद्ध्वंसत्वासंभवेन सत्तादात्म्यारोपस्यापि तज्ज्ञानाभावेनाली
कस्य पदार्थतावच्छेदकनाक्रांतत्वेन बाधाभाव इति वाच्यम् तत्ता
दृशाकारप्रकारणताभावेभावाभाव इति वाच्यम् धर्मिरूपेण प
रिणममानाविषयत्वे पक्षतन्नैव ज्ञानलिंगसत्तादात्म्यरूपेण
परिणममानत्वमिति नियमात् अलीकरूपेण परिणामा
मानापाक्षविषयताभावात् अत एवात्र सत्तादात्म्या
रोपस्याप्यसंभवात्पदार्थतावच्छेदकानाक्रांतत्वान्नवा
च्य इति

राम
१

घटः सन्निति प्रतीतेः तत्कात्म्यं
सत्वेन प्रतीत्यर्हत्वं नाम सद्रूपचित्तादात्म्यं व्याव हारिकं घटादौ तु व्याव
हारिकं तादात्म्यं प्रातीतिकं रजतादौ तु प्रातीतिकं तादात्म्यम् इति व
स्तुति एवंच यथा शुक्तिरूप्ये सदिति प्रतीत्या शुक्तिरूप्ये सत्तादात्म्य
संभवात् तस्य च पक्षतावच्छेदकाक्रांतत्वात् मिथ्यात्वस्य तत्रा
नुमानात् पूर्वं सिद्धत्वेन सिद्धसाधनवारणाय पक्षे प्रमातिरिक्ता
बाध्यत्वं पक्षविशेषणम् तथा लौकिकं सदिति प्रतीत्या लौकिकेपि स
त्तादात्म्यादेव संभवात् प्रमातिरिक्ताबाध्यत्वस्य चित्र
त्वस्य तत्र वर्तमानत्वेन पक्षतावच्छेदकाक्रांतत्वात् मिथ्यात्वस्य
तत्राभावेन बाधवारणायोर्थमपि किंचिद्विशेषणं कर्तव्यम्

2

सामान्यानुमाने शुक्तिरूप्यस्य दृष्टांतत्वंमुक्तकारेतोवाक्यम विशेषानुमाने
पटस्यैव दृष्टांतत्वं

3

स्वावच्छेदकदेशकालावच्छिन्नत्वे समानाधिकरणपेक्षानिरूपितयोगि
तानिरूपितानुयोगिताश्रयाभावप्रतियोगित्वं मिथ्यात्वमिति प्रकृ
ते मिथ्यात्वम्, अथ स्पष्टावच्छेदकतावच्छेदकस्य विधेयप्रतियोगितावच्छे
दकस्य च पर्याप्तिकत्वं तत्र प्रकाशानमाहार्थे तत्रेति उपलक्षितादीत्यर्थः
घटकत्वं संबन्धः तथा च उपाधिलक्षणघटकीभूता हेतुनिष्ठ
पक्षहेतु विशेष्यक मिथ्यात्वप्रकारके [illegible] निश्चयपत्वावच्छिन्न पूर्व
कालवृत्तिभावः × हेतुतस्य मिथ्यात्वं हेतु मिथ्यात्वम् एवं
विशेष्यकत्वं मिथ्यात्वप्रकारकत्वं च निश्चये विशेषणम् इत्यर्थः ×

कालो गगनानोत्वादित्यत्र लिंगांतलक्षणस्याव्याप्तिः गोत्वसमा
नाधिकरणीभूतो यः प्रलयकाले प्रलयत्वाभावाभावः तत्प्र
योगितानवच्छेदकत्वात् गोत्वस्य ध्वंसेन साकमत्यंताभाव
स्य विरोधेन प्रलये गवात्यंताभावासत्वात् न च देशिकविशे
षणता संबंधे वर्तमानेन ध्वंसेन साकमत्यंताभावविरोधात् सा
ध्याभावस्यैव लक्षणघटकत्वान्नाव्याप्तिरिति वाच्यम्
प्राचीनमते देशिकविशेषणतासंबंधेनापि कालस्य ध्वंस
वत्वेन तत्रात्यंताभावाभावात् यद्यप्येवमपि नातिव्याप्तिः
कालिकसंबंधेन गवात्यंताभावो यत्र तत्र देशिकविशेष

तत्र अंतःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्
अंतःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम् तत्र यथा
तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्व
देव चतुःकोणाद्याकारेण परिणमते
तथा तैजसमंतःकरणमपि चक्षुरादिद्वारा घटा
दिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते
स एव परिणामो वृत्तिरित्युच्यते अनुमित्यादिस्थले तु

तिधर्मदेशेनाऽखंडधीगोचर
त्वमोक्षप्राप्तिमत्वोभय
विधानेकल्पभेदः मोक्ष
प्राप्तत्वावच्छेदेनाखंडधी
गोचरत्वविधानमपिन
संभवति उद्देश्यतावच्छेद
कस्यविधेयपूर्ववृत्तित्वा
भावात् अतः अखंडधी
गोचरोद्देशेनमोक्षप्राप्ति
मत्वंविधीयतेनतदपिन
संभवतीत्याशयेनशं
कते नन्विति
विधेयतासंबंधेनउद्देश्य
विधेयभावावगाहि शाब्द
बोधंप्रति विधेयधर्मिको
द्देश्यतावच्छेदककालाव
च्छिन्नत्वप्रकारकज्ञानस्य
विधेयतासंबंधेनकारण
त्वम्

विधम् उद्देशेनाऽखंडधीगोचर
त्वमोक्षसाधनत्वोभय
विधानेवाक्यभेदः मोक्ष
साधनत्वावच्छेदेनाखंडधी
गोचरत्वविधानमपिन
संभवति उद्देश्यतावच्छेद
कस्यविधेयपूर्ववृत्तित्वा
भावात् अतः अखंडधी
गोचरोद्देशेन मोक्षसाध
नत्वं विधीयते तदपिन
संभवतीत्याशयेनशं
कतेनत्विति
विधेयतासंबंधेनउद्देश्य
विधेयभावावगाहिशाब्द
बोधंप्रतिविधेयधर्मिको
द्देश्यतावच्छेदककालाव
च्छिन्नत्वप्रकारकज्ञानस्य
विशेष्यतासंबंधेनकारण
त्वम्

कु॰टी॰

१

विषयानि ततानंगत्वं च विवादितं तदुक्तं इत्यादिश्चेन्निरंगः स्यात्तदेवादि विषयोऽथवाऽस्यां गभावभागवास्यात न तदास्यापि शब्दभाक् इतिस्यांन एव चापि व्यक्तस्य रसत्वं पदार्थः पि२ कारणान्यथ कार्याणि सहकारीणि यानि च इत्यादेः स्यापिनो लोके तानि चेन्नाट्य काव्ययोः विभावांनुभावास्ते कथ्यंते व्यभिचारिणः व्यक्तः सतैर्विभावाद्यैः स्यापिभावो रसः इति आभिव्यक्तानां च रत्यादीनां रसरूपाणां क्रमात् शृंगारहास्यकरुणरौद्रवीरभ या नक बीभत्साद्भुत शांतरूपा विशेषसंज्ञा बोध्या निर्वेदादिरिति निर्वेदग्लानिशंकाख्या स्तथासूयामदश्रमाः आलस्यं चैव दैन्यं च चिंतामोहः स्मृतिर्धृतिः व्रीडाचपलताह र्ष आवेगोजडतातथा गर्वो विषाद औत्सुक्यं निद्राविस्मृतिरेव च स्वप्नो विबोधोमर्ष श्चाप्य वहित्थमथोग्रता मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च त्रासश्चैव वितर्कश्च विज्ञेयाव्यभिचारिणः त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः इति भरतेनोक्ताः

स्म॰ २७

स्म॰ तं॰ ५

स्थ

ताम

१

भावस्येति निर्वेदादेर्व्यभिचारिभावस्येत्यर्थः प्रत्यक्षप्रमुखाः प्रत्यक्षाद्याः ते च प्रत्यक्षानु
मानोपमानशब्दार्थापत्त्यनुपलब्धिसंभवैतिह्याख्याः विभावेत्यादिः रत्यादेरालंबनो
द्दीपनरूपाणि नायिकाचंद्रोदयादीनि कारणानि काव्ये वर्तमानानि विभावयंती
ति व्युत्पत्त्या विभावपदेनोच्यंते कार्याणि च कटाक्षरोमांचादीनि तथाविधान्येवा
नुपश्चाद्भवंतीति व्युत्पत्त्यानुभावपदेन एषामेव कार्याणां रत्यादिनोत्पादने कर्तव्ये
सहकारिभूतान्युत्कंठादीनि व्यभिचारिपदेन विशेषादभितः समंततः कार्यस्यापि
नं चारयंतीति व्युत्पत्तेः एवं रतिराशाबंधिनुरागादि बोध्यांतःकरणवृत्तिः विकृति वि
दूषकादिचेष्टादर्शनजन्याचित्तस्य विकाशरूपा वृत्तिः हासः इष्टनाशानिष्टलाभा
दिजन्याचित्तवृत्तिः शोकः प्रसिद्धः आदिपदेन क्रोधोत्साहहास्यभयजुगुप्साविस्मय
निर्वेदाख्यानां षण्णां परिग्रहः विशेषपदेन रत्यादेःस्थायित्वप्रयोजकं पुष्टत्वं कांता

परि१

कु· टी·

२

षांतरूर्णि विलुंठितं किरंतापातौः मिल्लीलाभांतरूणिनानुजरैरतिचपलैः स्तनैरतित लै

रामतिशयेन लोलैश्चंचलैरपांगैर्नेत्रप्रांतैश्चावलिंतास्तज्ज्याप्रोद्गतरोमांचाः विस्मृतोपक्रम मि

मोल्लुंठनरूपोपैस्ताद्दशास्तिष्ठंतीत्यन्वयः तत्र शृंगाररसस्याननु— बंधुराजवनिताविष

यत्वात् अनौचित्येन प्रवृत्तिरित्याभासरूपत्वं त्वपीति औनिष्ठ अभूत् पुपितं प्रा ज

नेतद्विषयेति प्रभुविशयादिषत् गणस्यपारतिस्तद्रसइत्यर्थः अत्रशत्रुविषयकत्व

रूपानौचित्येन प्रवर्तितत्वात् भावस्याऽऽभासत्वम् पश्यामइति नापकस्यस्वामित्वं

प्रति नापि कावृत्तांतस्योक्तिः नापि तूष्णींस्थितेः किमयं प्रपद्यते कुहते पश्यामइत्य तत्र

मा भिप्रायेण मयास्येयं मौनरूपं लंघितं मे गिरातं पश्यामइति बहुवचनं सर्वीस

नाजाभिप्रायम् एवंतपापि अयं खेलसठो मां किं नालपति न भाषते इति कोपआ

श्रितः इत्यन्योन्यं परस्परं विलदपालक्ष्यरदितापादृष्टिः तत्रचतुरे सव्याजं निमितं

3

म

लज्जादिगोपनं वहित्थात्वोभावः देवतेत्यादि अपरिपुष्टत्वादेहपल्लवानां रतिरिति चा
पुष्टत्वादेः अनौचित्येनेति एतज्जोदाहरणो दर्शयिष्यामः मुनिरिति कुंभसंभवो ऽग
स्त्यः एकचुलकेन समुद्रेपीयमाने तदंतरगततयोरवतारूपयो मत्स्यकूर्मयोर्दर्शनेन ग
म्या ऽ उत्तरस्तो मुनिः प्रभावातिशयप्रपंचसन्ततनपातद्विषय इति पोषकत्वात्तदंगमि
तिभावः अयमिति भूरिश्रवसाच्छिन्नं हस्तमवलोक्य तद्वधूनामुक्तिः सपूर्वानुभूतोयं
करः यः कांचिसमाकर्षणशीलः नीवीवसनग्रंथिः तस्यांविस्रंसनमोचकः इति भावः स्मर्यमा
णपाश्रृंगारावस्थापकरुणरसपोषकः कदेति निमिषमिवदिवसान् कदानेष्यामीत्य
न्वयः कीदृशः काश्यांगंगातीरे वसन् अयेइत्यादिक्रोशन् इत्यमेदेनान्वयः अत्युच्चा इति
प्याराविस्तीर्णाः प्रसीदामि प्रसंशयामि मुखः य पिष्ठाः इमां भुवं विभ्रमन् धारयामास त्वमस्य
रीति देवी संत्रासतोभयात् वनेसत्वरंगच्छ तीति वसन्तपार्थिनः शात्रवोवसुंधरेशाभूपाते

स्तुक्यं एवमग्रेपि श्रुतं शास्त्रं अवगामिति मतिः अहो कोपेपीति स्मरणम् अपगतकल्म
षा कृते सुकृते धीर्येषां ते किं वदिष्यंतीति शंका स्वप्नेपीति दैन्यम् हे चेतः स्वास्थ्यमुपे
हीति धैर्यम् कः खलु पन्यो युवा तरुणः अपरं धास्यतीति पास्यतीति चिंता विप्रलं
भो वियोगः इति पर्यायो क्रांतेति इंद्रियाणां वर्गः समूहः मधुनि मद्ये निर्वेदा रतिर्दे
तिं प्राप कथंभूते संक्रांते त्रिपथखेप्रतिविंवे मानकोमलान् प्रपल्लवतुंगं यो स्वा
द्वनि आस्वादये मकरंद नाट युक्तमन्मरयुते शीतस्पर्शे चेति अंघ्रिपतन्ला तज्ज
न्यप्रत्यक्षमलंकारः किमिति आरादूरे इति लक्षणं संदिह्य काश्चित् वक्रमरुवाति
नां मरोदैरद्वयपेर्विवोकैः नानाविधकथालापे विचोको ना दरं क्रियेतयुक्तल
क्षणे ईहा व विशेषेर्सुख मितिनिश्चकाय निर्णीतवान् इति प्रत्यक्षप्रकरणं प्रचेति
प्रचाशब्दा अनुमानार्थाः प्रचाशब्द सु निर्दिष्ट सुल्पयोगानुमानयोरिति विश्वको

तरक्षाज सहितं तदिति एणयिमव निनीषामिनेतुं इच्छामि यतस्त्वं देवरूपेण समः
समस्त्रिपोनलः पत्रिणा हंसेन पादेन विलिख्य अदर्शि दर्शितः एकेति हे वीर त्वया
मात्रेण पुरुषस्य प्राणद्रावी यो विरहक्लेशः तदसहिष्णुं लोलाक्षीं दयितां प्रपन्नत्वा
श्रोः संग्रामाडंबरं माकर्णयतः भवतः एकाकपोलस्य पालीद्राक्शीघ्रं पुलकैः
कुसुमायुधस्य मदनस्येषुभिः तूर्णमिव प्रव्यक्तां पुंखावलीशरपुंखपंक्तिर्यत्र ता
प्याभूताऽभूत अन्याभितीपाजे तुर्जयश्रीलस्य मंगलपालिकाः मंगलरूपाः पालि
काः कुशकादिनिर्मिता भयपापूर्वैस्यस्तं वृत्तादि पुवरमार्गपालीति प्रसिद्धा तद
भूदित्यर्थः अत्र प्रेमपदोक्तायारतेरपरिपुष्टत्वात् भावरूपत्वं बोध्यं कार्यमि
ति श्रुत्कन्यां देवयानीं दृष्ट्वा तोरातोपपातेरियमुक्तिः अकार्यं ब्राह्मणकन्याश
क्तिः शशालांछनस्य चंद्रस्य कुलं नाम वंशः अपवितर्कः तदुपमर्दनभूयो यीत्यो

स्थानकत्वात् इति बोध्यः एवं निलीयमानैरित्यत्रापि अपं कालः सूर्यास्तोपः सौ
मित्रेति विरहातुरस्यात्मनस्य लक्षणंप्रस्तुतिः अत्रापि अपं चंद्रः कुरंगधारीत्यादिति
प्रयोगः इत्यनुमानम् तामिति तारकाणां न्यासः सन्निवेशविशेषः शकटस्याकारं
संस्थानं आश्रितः तां रोहिणीं विजानीहि इत्यतिदेशवाक्यार्थज्ञानमिहोपमानं इयं
शकटाकारनक्षत्रपंक्तिः रोहिणीपदवाच्येत्युपमानम् प्रतिकारणत्वात् अत्रेति अ
त्र ऋतुराजसुमध्ये मन्मथमिवातिसुंदरं महीपतिं वेंकटपतिं संतं वेद्मीत्याद्यन्वयः
दानवारिर्विष्णुः शैलराजं सुरं पेर्पघालिनं मदनशासकत्वात् प्रत्यक्षमिति सादृश्यादि
विशिष्टपिंडमत्यक्षस्यापि फलायोगव्यवच्छिन्नत्वेन कारणत्वादिति भावः फलेन
उपमितिरूपेण इत्युपमानं विवृणवोति कुमारसंभवे बटुरूपं हरं प्रतिपार्वत्या इय
युक्तिः वटुदोषं प्रकाशयतापि स्ववलितांतःकरणेन तत्त्वपार्श्वं महादेवं प्रतिएकमलक्ष्य

ध्रात तस्याश्च चंचलजलदरूपो धूमो व्योम्नः आकाशस्य रंध्रमवकाशं यस्मात्तस्य गाय
ति यस्माच्च कीरमणयः खद्योताः स्फुलिंगानां रूपं दधति यस्माच्च विद्युतरूपाशिखा
लाभिः उल्लसिताः प्रकाशिताः परितः पिंगवर्णा स्वकाकुभो दिशा तस्मात्पथिकरू
पाणां तरूणां खंडे समूहे स्मरलक्षणो दवाग्निर्लग्नः इति मन्ये इत्यन्वयः प्रयोगस्तुप
थिकतरुखंडे स्मरदावानलवत् व्योमव्यापिजलदधूमवत्त्वात् इत्यादि वौध्यः यत्रे
ताः इति लहरीव च्चं [illegible] चलादृशो यासां ताः एताः कामिन्यो यत्र जनने भ्रूलतां व्यापा
रयंति प्रेरयंति तत्रैव भ्रूसंज्ञा विषयएव यच्चस्मादभीममर्मस्पृशीनो वाणाः सततं
पतंति तस्मात्मंडलीकृते चापेऽभाविताः योजितउच्चैः शरास्तत्र तु प्रेषणचपलः कटा
क्षस्य ताः दृशः क्रोधनः भरः श्रासनमात्रात स्मारकैः आलम्यजतो धावतीति सत्यमि
त्यन्वयः अतिशयोक्तिर्मार्गणत्वेन दृशामध्यवसानादितिभावः प्रयोगस्तु नातता
स्वक्रीकृतचापलदोषरेधावदृशाकारमदनकाः मर्मभेदिवाणाः अपभ्रूसंज्ञा

कु.टी.
५

श्रुत्पातत्तीपादिरूपपापप्रकर्षेण शीघ्रं सिद्ध्यर्थं गां गिभावेतति लिंगमर्थप्रकाशन सामर्थ्य-
रूपं साध्निपते पश्चैंद्रागार्हपत्यमुपतिष्ठत इति श्रुत्या गार्हपत्यो पस्थाने विनियुक्तस्य
मंत्रस्यैंद्रप्रकाशन सामर्थ्यरूपतो लिंगेनेंद्रो पस्थाने वियोगादिपते इत्यर्थः करिगिरी
प्रवरः काल रूस्तीश्वरः विदितमिति इत्यंभूतः परार्थैकप्रवृत्तिकः अत इत्यस्य चे
ष्टारूपप्रमाणं तरं नाद्यंनीयम् इत्यग्रेतनेनान्वयः लोलमिति गुरूणां सान्निधाव
पि हास्यं नापकाश्यं समयोचितो विपिनौत्सवः यस्या लोलं तया नापिकया विप
न्नस्य सपत्न्यादेर्दिशा उपन्यासे तत्स काशादागतोसीति सूचने कृते नापकेन नेति सूना
पाशीरो विधूतं संचालितम् ततस्तदुत्तांतपरीक्षणे नापिकया कृते सत्यकृतेन मस्कारः
विलक्षण एवास्थितः ततई पन्नाम्नकपोलकांतिर्यस्य तादृशो नापिका यां गुरवे कोपा
तिशयाज्जातेसति तत्पादपोर्द्दक्षिपाते नैवानतः प्रणत इति किमत्र मिरति व्याख्यातं

९
राम
५

जन्मत्वं साधु कृतं यतो यमीशमात्मभुवो ब्रह्मणोपि कारणमामनंति वेदाः सकाषं लब्धः
प्रमवउत्प जिस्या नं पश्यता भूमविष्पतीत्यन्वयः द्विवदाणो काचित्पाठः वकुणिष्य
ते तितदर्थः वलादिति नास्तिको तिरिपं हेजनाः स्थापना निवलात्कारतः तानिच
पापानि वो पुण्याकम कृतान्येव भवंतु यतो बलात्कारेण कृतान्सर्वान् पदार्था
न मनुरकृतान ब्रवीत् इति तदूषणपरेण सकी मिनतार्थ दूषणपरेण आत्मनस्तु
ष्टिप्रीतिः वेकल्पे विकल्पेगमाह मेवाद्वै ब्राह्मणस्योपनयनमित्यादौ प्रमाणमित्यु
क्तं मताजनेति दमयंतींप्रति नलोक्तिः नाम वितर्के नाददते न गृह्णाति आचार
त्यागिनं विगापति निंदति अमर्षो मिति तत्रेणच त्रिपेण परिग्रहे हस्माज्ञोज्ञापा
स्तत आर्यश्रेष्ठं मन्मनो ऽस्यां संकुंतलापाम मिलाषशीलं यदेतु विकल्पेषु त्वं ही
ति वरमुद्रिकां वरमुद्रां न पत्सेनपारपाहि आजिवैर दत्तं ज्ञात्वा पातिंगं गमकं पदे

नोचित इत्यन्वयः अयमात्मवाननुरूपः इत्यन्वयः अत्र दुःखोदेः संभवाख्यं प्रमाणं
ति दृश्यकथनं पेनामेति भवभूतेरुक्तिः नामेति कुत्सने नामसकाश्यपसंभा व्यक्रो
धोपगमकुत्सनेष्वित्यमरः किमपीति काकुः न किमपीत्यर्थः एतत्काव्यनिर्माणरूपः
समकोपि समानधर्मा यउत्पत्स्यते आप्तिवा तं प्रतिपत्तः हि यस्मान्निरवधिरयं कालः
पृथ्वी च विपुलेति क्रमेण योज्यम् अत्र कालो ह्ययमिति आदिनात्रोपपत्तिकं संभवा
ख्यप्रमाणमुपदर्शितम् भ्रातरीति पथिकं प्रति ग्रामस्थस्य प्रश्नः कुत इत्यनन्तरं
मागत इति शेषः नगरादित्युत्तरं वार्त्तेति पुनः पूर्वस्य प्रश्नः वाढमित्युत्तरम् अंगीका
रे स्तीति अर्थः ब्रूहीति पूर्वस्योक्तिः पुत्र इत्यादि पांथवचनम् सत्यं जीवतीति पुनः पूर्वस्य
प्रश्नः जीवतीत्यादि सर्वं पांथवचनम् इति संभवः अनिर्दिष्टवक्तृकेति अनिर्दिष्टः वि दान
शेषतो वक्ता प्रवक्ता यस्येत्यर्थः एवं चैतदेवेति ऐतिह्यलक्षणमिति दर्शितम् इति प्रमाणालं

तस्यैवेति नलमुखचंद्रव्याख्यातुः स्मरस्येत्यर्थः तत्रास्ति कदाचित्कालिमेति भावः
इति शब्दः निर्नेतुमिति अत्रीति वर्णितुं प्रकथितमित्यन्वयः व्यक्तमिति हेतुत्ताकंः
यदि व्यक्तं प्रकटं वलीपानं तदा साजात्कीजलपिना पूर्वपत अन्यथा पूर्णैव सति अ
र्णः समुद्रस्य जलं गांगो घोनिर्मलसितंतनिरस्कृतं सत् शंखकंठसमानवर्णं नीलं कथं
स्यादित्यन्वयः इत्यर्थापत्तिः स्फुटमिति हेतान्वि कर्तपंत त्वर्कश्रीला अपिलोकान्त
वावलग्नमपश्यंतस्तवावलंबमप्यसदिति स्फुटमेव निश्चिन्वते कुलपर्वतश्रे
ष्ठयुग्मत्वेनाप्रवर्तितम् स्तनद्वंद्वमाधारं विनापदार्त्तेतत्त्विदं मकरध्वजस्यैंद्रजालं मा
यारचितं मतीमः इत्यन्वयः इत्यनुपलब्धिः अभूतेति ईश्वरं प्रतिभक्तस्योक्तिः पूर्व
मभूतं अभूतपूर्वं ईदृशं मम किं कभावि न किंचित् सर्वैश्वर्यशीतातपादि द्वंद्वसहैरपि यतो
मम सहजमेव दुःखमास्ति किंतु हे नाथ तव शरणागतानां भक्तानां वदग्रे पराभवो नानुरूपः

पादएवांबुजमिति तथा सत्यंबुजप्राधान्येमंजीरसिंजितान्वयायोगात् इत्युपमैवनरू-
पकमिति ज्ञेयम् इतिसंक्षेपः नलेखितिं तदामालकंपितानां मलीहृहाणां तले-
षु ड्रुपाः अवेपंत कंपमाना आसन् तत्रोत्प्रेक्षते शाखां करूपेण किं हेनाच्छिन्ना
कृतीनां तपोलक्षणगजानां परीवारत्वं इवेति गुणानां चेति नातीयाधिकारणकत्व-
त्वम् अस्यार्थः गुणभूतानां पदार्थानां पुरुषार्थत्वात् मुख्यप्रधानार्थत्वात्परस्परस-
संबंधः कुतः समत्वात् अप्रधानत्वसाम्यादिति यथा भाष्यकारमते यावनेष्ठी नाम
धानस्य चाहवनीयार्थत्वात् परस्परं नागांगिभावसंबंधः यथा वार्तिककारमते अ-
ग्निसमिंधनार्थानां मंत्रविशेषरूपाणां निविदां सामधेनीनां चेति संक्षेपः एतदपिकार-
णपूर्वपदसिद्धांतो प्रकृतानुपयोगान्न दर्शितो स्वरूपनाशेति स्वरूपनाशरूपमु-
पचरितं पदारुतिलवनमित्यर्थः तथा च तमोंशे उपचारेणान्वय इति भावः नचैवं

ननु एवमपि तमोंशस्य विशेषणस्यान्वयाभावात् कथं रूपकसिद्धिरित्याशंक्याह
स्वरूपेति क्रोडीकारेण निगरणेन लक्षणामूलेति साध्यवसानलक्षणामू-
लेनेत्यर्थः १

तम

१

कारणकरणम् यस्याः संभवमिति संसृष्टिसंकराभ्यां द्वयोस्तद्धर्मिकाणां वेति यस्याः संभव
मित्यर्थः स्फुरेति स्फुरणं वा गम्यमानो भेदो येषामितिविग्रहः एकस्मिन्नवाचके अ
नुप्रवेशोऽवस्थितिः एतत्सर्वमुदाहरणे व्यक्तीभविष्यति कुसुमेति माघे ऋतुवर्णने
पद्यमिदम् अन्यया कयापि वनितया चलितया कलस्वरेणवेलायाकां व्याः कल
लः कोलाहलो विद्यते किंभूतया कुसुमसौरभेन परिभ्रमतां भ्रमराणां संभ्रमेणाच
तविशेषेण संभृता सभ्रूभ्रवाक्षो भायस्याः तस्या अलकालोलायस्यां तादृशी दृक् यस्याः
स्तस्या भूतयेति आनंदेति आनंदेन मंथरं यथास्यात्तथा पुरं दरेणं डेणमुक्तं अर्पितं
माल्यं यत्र तादृशाम् भासि वासुरस्य मौलौ मस्तके हठेन निहितं मंजुमनोज्ञं मंजीरस्य
नूपुरस्य सिंजितं यत्र तादृशं मनागं संविकायाः पादांबुजं अंबुजसदृशं चरणं नो
स्माकं विजयाय भवत्वित्यर्थः अत्र पदांबुमित्युपमितसमास एव न तु मयूरव्यंसकादिवत्

तरि श्रेष्ठेहारमध्यमणावपीति विग्रहः प्रतिशयो न्यासेन तेनमेघानामध्यवसानरूपायाः ग
र्भै वेत्यनेन तिलतंडुलन्यायेन स्फुटावगम्यमानभेदायाः संसृष्टेः स काशा द्वैलक्षण्यं दाशीतम्
एवमग्रेपि चमत्कृतिजननेपरायेतत्वादं गांगिभावमापन्नं क्वाप्य परस्परेति अंगुलीभिरिति
शशी अंगुलीभिरिव मरीचिभिः केशसंचयमिव तिमिरं संगृह्य कुड्मलीकृतं सरोजलोचनमि
व पत्रतादृशम् रजनीमुखं चुंबतीत्यन्वयः तन्मायेति उपमादेकुलसंदर्भपाचादित्यर्थः
मुख्येति मुख्यार्थरूपं पत्रकुड्मलीकरणरूपं लिंगं पुंव्यक्ता धारणाधर्मस्तस्यानुकूल्यादि
त्यर्थः उपमानपकत्वाविशेषात् अंगत्वाविशेषादित्यर्थः चंद्रस्य चुंबनोत्प्रेक्षायां दांपत्यव्य
वहार समारोपात्मक समासोक्तौ चापेक्षि तत्त्वनापकसाधर्म्यस्योपमाभ्यामसमर्पणात् क
थं तयोस्तदंगत्वमिति शंकते यद्यपीति मरीचिभिरिवेति मरीचिभिरिवांगुलीभिरिति
मिरमिव केशसंचयं इत्यन्वयमित्यर्थः एकैकविधयस्यार्थ कृपत्याभेदाध्यवसायेन

सत्युपमांगीकारेपि किं वाच्यं तदंगीकारे प्रधानान्वये प्पपन्चाण अप्रापत्तेः तदवेज्ञपाऽप्रपाते
तमोंशे तदंगीकारेण रूपकस्यैवौचित्यादिति न ह्यत्र चानाक्षिप्ति सिद्धेदित्यनुवर्तते उत्प्रेक्षा
नसिद्धेदित्यन्वयः इवशब्दस्य सादृश्ये प्रसिद्धतरत्वेनासत्तितात्पर्यग्राहकेसंभावनावाच
कत्वासंभवादितिभावः रूपकं तूत्प्रेक्षायां तात्पर्यग्राहकमस्तीतिशंकते नन्विति एवमु
क्तौ तमोगजानामित्युक्तौ तस्याच साधकांतरस्य साधकांतराद्रूपकत्वात् रूपकस्योत्प्रेक्षांग
त्वमविकलमितिभावः अवन्विति सवितुः सूर्यस्य तुरगावली अश्वपंक्तिर्नीलमानवतु के
वनभः श्रियोगगनलक्ष्म्याः मरकतमयपत्रतो तस्याः स्फुरितो दासिमान्मध्यरागतिनामेकल
त एकावली वेत्युत्प्रेक्षा सूर्यतुरगाणां हरित्वाच्चात् कथंभूता सम्यग्जातिलंपितास्तुंगा उच्चाः
पयोधरा येषां एकावलीपदेपयोधरौ स्तनौ तस्याः स्फुरितो दीप्तिर्वन्मध्यगतः अरुण
रूपो नायको नेता सार्थिर्यस्यां सा पदे अरुणः अरुणः सारथिः नायको दासेम्ध्यमणिः नायकेन

उत्प्रासितांतस्य निर्वृत्तिकत्वेनाश्रये पत्र माघ्रांकमानं सत्याह एवमिति पाद्योपमिति पां
डुतनामापं नृपः अद्रिराज इव भावति कथंभूतः अंसयोरर्पितोलंबोत्तरीयेपल्लसः तथाहरी
चंदनेन रक्तचंदनेन कृतः कृतः अंगरागोऽनुलेपनं येन तथाभूतः अद्रिराजः कीदृ
क् वालातपेन रक्तोनितान्तनितंबस्थलः तथा निर्झरस्यो द्गारेणो द्गमेन सहितः पिन
द्धीति व्याख्यातं प्राक् यो र्वा पर्वतोति तथा च चमत्कार प्रयोजकयोर्वाक्यपर्यघटकत्वेन
भेदानवभासांसंसर्गे वैलक्षण्यमिति भावः दर्शादिवत् दर्शपौर्णमासादिवत् अपं
चाग्निकालीनयोरपि समप्राधान्येन दृष्टांतः फलं तत्र स्वर्गः प्रकृते तु चमत्कृतिविशे
षः शशिनमिति अत्रानन्वयेऽनुमत्याः स्वपं वैरं समग्रगुणयोरजेन्दुमत्योः योगामीति
यं भांते पारणानागरिकाः नृपाणामन्येषां अवलोकनपीडाकारं इति प्रबोधरूपं एकवा
क्यं विवव्रुः उद्गारपामादुरित्यन्वयः तेन सर्वनाम्नासोऽनुमती विंवभूतो धर्मः अजक

ता

त्वन्वयः तयोर्वाक्यसमासयोस्तौपपत्तयोः आवश्यकाभेदान्वयबाधेनोपपत्तौ कृतमन्वयां
तरसमासांतरकल्पने नगौरवेणेत्याशयेनाह यद्वेति तनुत्वदीर्घत्वादेरुत्कर्षे निपातनिय
मानुरोधेन यथासंख्यक्रमपरित्यागः तथाचांगुलीमरीचिभ्यां तनुत्वनीरंध्रत्वाभ्यां निमि
रसेवासंचयप्रयोरावरणरूपत्वनीलत्वाभ्यां सरोजलोचनयोर्दीर्घत्वकांतिमत्त्वाभ्यांच
सादृश्यं बोध्यम् प्रातिस्विकरूपेणांगुलित्वमरीचित्वादिना अनुगतेति अनुगतं यत्सा
दृश्यप्रयोजकं रूपं तनुत्वादिकं तेनेत्यर्थः एतच्चसादृश्यपरिकल्पितमित्यभिप्रायेण सिद्धांतादि
ति तदुक्तं साधर्म्यं त्रिविधं भेदप्रधानमभेदप्रधानं भेदाभेदप्रधानं चेति उपक्रम्य विधा
नाच्चाभेदाभेदसाधारणसाधर्म्यमूलत्वमिति ननु भेदाभेदरूपांशद्वयोपेतायामु
पमायामभेदांशस्यानुपयोगात्कथं तस्या उभेदाद्युपयोगित्वमित्याशंक्य परिहरति
नहीतिप्रकाशश्च शीतापनयनं चेति द्वंद्वः शीतार्त्तः शीतार्तः शीतोत्कंपत्तदमुहने

चंद्रिका

तिवाप्रेतीति संस्कृतम् अत्र पूर्वार्द्धेऽनुप्रासः तृतीयपादे रूपकमिति तिनयोः संसृष्टिः वाच्य
प्रतियोगिकत्वादितिवाच्यम् प्रतियोगिप्रतिलंबं प्रियचक्षुत वाच्यम् प्रतियोगिकं तत्त्वादिप्र
र्पःए वंच काव्यावाच्यार्द्धेनानुप्रासादेः शब्दालंकारस्य तदनुप्रवेशकोनवाचकानुप्रवेश इति
वक्तुंयुक्तमितिभावः सत्पुष्करेति यस्यां नगर्यां तामीदृक्षाउद्यानवापीषपसीवनादयस्संहर
मंते क्रीडंति कीदृशैः समीचीनैः पुष्करैः कमलैः योनिनोपेतरंगास्तच्छोभावति गदरूपदेस
मीन्वीनैः पुष्करैर्वाद्यभांडमुखैर्योति नोपेतरंगोनत्यमूमिस्तच्छोभिनीत्यर्थः पुष्करं करी
हस्ताग्रेवाद्यभांडमुखेजले व्योम्नि खेंडफलेपद्मे त्यमरः श्लेषमितिकेति श्लेषयोगितिरि
वप्रतिमूलं यस्येत्यर्थः रागवतीति रागोनुरागो रक्तिमाच अंबरमाकाशंवस्त्रं च नन्व
त्र विशेषणसाम्यप्राप्ते दाक्ष्यवसायापेक्षणेपि सद्दशात्पुष्करे इत्यादौ शब्दसाम्यमात्रे
णाप्युपमोपपत्तेः नतत्वपेक्षेत्यतआह शब्देति शब्दतोर्थतोवेति शब्दप्रयुक्तमर्थप्रयुक्तं

र्गकं वरणं तत्र तस्मिन्पदे विलीयेति अग्निसंयोगेन घृतादिवत् केनापि हेतुना विलीन
तां प्राप्येत्यर्थः विकचं विकाशितं जडभावः शैत्यम् मदन एवाशीतो वह्निः संरंभस्तात्पर्यं
सितमणिति स्फटिककुंभांतः स्थितैस्त्याश्चैव तीक्ष्णैः सुभ्रीकृतैः जलैः सितमौक्तिकमित्यन्वयः
मुखेनेति संदोहः समूहः लब्धपित्वेति स्फुरत्येकत्र विषयेषा द्वार्धालंकृतिरुपमेति रूने
णेत्यर्थः स्पष्टेति अथोनंतरं दिनरूपं मरविंदं संचु कोचसंकोचमगमत् कीदृक्स्पष्टं उ
च्छसंत उल्लसंतः किरणा इव केसराणि यस्यास्तथाभूता रूपविंबरूपा कर्णिका वराटी
यस्य तच्छिलष्टाम काशाभावेन परस्परं मिलिताः अष्टदिशा एव दलानी कलापाः तन्मुखे
नावतारोपस्यात्तादृशी वक्त्रा अंधकाररूपा मधुपावलिर्यं न तथाभूतमित्यर्थः पदभेदेने
ति सोणत्विट् हंस्य गामोजोणअमहमहं तलाआणं तरुणातहि अअलहटिं पसिसक्कंति
सिवारई सनास्त्पन्न ग्गामेयणतां स्फुरल्ला वणंणं तरुणानां हदयालंठ्ठं परिसप्पंती

तत्रैव बालांभिलाषानाकृष्ण इत्यत्र वक्ष्यमाणेति संकीर्णतापि पद्यति वक्ष्यमाणेत्यर्थः त
योरुत्कृष्टकाव्यालिंगयोः तन्मूलः संकरमूलः ताभ्यां संकरं भातीति मञ्ज्यां तयोः संकर
भातीति मतो: तस्य उदात्तस्य हेतुमतः कार्यस्याभेदकथनं तत्त्यागलीलापितस्य कार्यमि
ति च वक्तव्ये तदेतत्त्यागलीलापितमित्यभेदकथनम् तदीयेति राजकीय इत्यर्थः अत
व्येपादर्पति असत्योदार्य इत्यर्थः तन्मूलकस्येति वितरणोत्कर्षवर्णनापि हेत्वलंका
रमूलकस्येत्यर्थः ननु राजसंपत्समृद्धेर्जनागम्यत्वेन वाच्यत्वात् कथं वर्णनामको
दात्तालंकारेण सहैकवाचकानुप्रवेशकथनमित्याशंकायामाह वाचकशब्दस्येति
त्रयाणामिति एकउदात्तातिशयोक्त्योः अन्योव्यंग्योदात्तप्रस्तुतप्रशंसाप्रस्तुतांकुरान्य
तरयोरित्येवं त्रयाणां परस्परमित्यर्थः उदात्तालंकारस्य हेत्वलंकारांगतापाः पूर्वमु
क्तत्वात् उदात्तातिशयोक्तिसंकरस्यापि तदंगत्वमिति शंकां निरस्यति उदात्तादिमात्रस्येवेति ॥छ॥

वाधत्कविसंमतंसाम्यंतत्प्रतिपादनइत्यर्थः सर्वविधेसर्वप्रकारे पद्येति चंद्रिकाह्ला
दनइतिधात्वनुसारात् चंद्रपदस्त्वर्थं मन्दद्योन्त्यर्थंतामातस्मात्तन्मद्रूपस्याप्युक्तत्वा
त् विधकरेति सहसस्तत्रमैत्रीवनेनदमयंत्या उपायेन हृतचित्तोव्यः विचित्तः कथंभू
तेन चंद्रकिरणश्लेषादानैरंगीकृतैर्निष्पंदैः स्रुतैश्चंद्रकांतपरितैः स्नानहूणमालवा
लैर्विफलीकृतजलसेकप्रकालरूपगोरवेणेत्यर्थः शाब्दविवास्थितेति शब्दप्रवृत्ते
त्यर्थः तथाचप्रसप्राधान्यमर्थप्राधीनदविघटमिति भावः प्रतिक्षिप्यते निर्वार्यते को
प्यंतरमनेनेति प्रतिक्षेपोविरोधः मुक्ताइति विदुषांभवनेषु मंदिरेषु केलौसुरतक्री
डायांविच्छिन्नस्तूत्रात् हारात् गलितं [illegible] मार्जनीभिरपसारिताः प्रातः काले अंगणप्रा
ते चलतां बालानां चरणलाक्षारसेनारुणामुक्ताः दूरादाडिमबीजशंकितधियः क्री
डाशुकाःपत्काषेणोत्पाकर्षति नतभोजबद्धपते स्यापागस्यदानस्यलीलायितम् इत्यन्वयः

उदात्तादीत्यादिपदेन हेत्वलंकारपरिग्रहः हेत्वलंकारादीत्यादिपदेन चाप्रस्तुतप्रशं
सापरिग्रहः तत्रापि निरतिशयैश्वर्यवर्णितं लोकेषु पर्यवसायिनो हेत्वलंकारस्यै र
वतादृशवितरणरूपकार्यपरिकल्पनाद्वारा तज्जन्यप्रस्तुतसाजात्यं पदुत्कर्षप्रशंसारू
पापामप्रस्तुतप्रशंसापामंगत्वम् न त्वद्भुततत्स्य वर्णिना रूपायुक्तिसंकरस्याप्यपे
क्षेतिभावः पश्चापोस्य मितितस्याहि उदात्ततद्गुणयोरंगांगिभावसंकरस्यचांगांगिभा
वेनसंकरः तस्यान्यांतिमद्गुदात्तयोरंगांगिभावसंकरस्योदात्तांगकहेत्वलंकारादिसं
देहसंकरस्यचांगांगिभावेनसंकरः इतिसूक्ष्ममतिरूहनीयं स्वकीयमनुवृत्यपेग्रंथ
नामस्वनामतो निवध्नन् ग्रंथपद्धतिमनुवदति अनुमितिरिति स्वग्रंथस्य प्रामाणिकत्वं
सूचयतुमाह चंद्रालोक इति शारदागमसंज्ञक श्रीचंद्रालोकमूलभूतो ग्रंथः शर
त्कालागमेन चंद्रस्यालोक इति श्लेषः तस्मात् कुवलयानंद स्वग्रंथोऽभूत् कुवलयस्य

कुमुदस्यानंदइतिच ।।=।। श्रीशिवंभवे ।।= विद्वद्वृंदमहामान्यरामचंद्रात्मज:मना
विदुषावैद्यनाथेनकृतालंकारचंद्रिका १ एतांकुवलयानंदप्रकाश नविशारदां
विदांकुर्वंतुविद्वांसोकाव्यतत्वविदांवरा: असौकुवलयानंदचंद्रालोकोऽस्यितो
पितन्प्रतिष्ठांलभतेनैवविनालंकारचंद्रिकाम् २ इतिश्रीमद्रामचंद्रभट्टात्मजवै
द्यनाथकृताकुवलयानंदव्याख्यालंकारचंद्रिकासमाप्ता ।।=।। राम ।। :ॐ: :ॐ: